# भूमिका ।

अथ प्रायः खलु बहुषु निबन्धेषु 'लोकप्रसिद्धयुक्तिर्न्यायः' इत्यभियुक्तोक्तिरूपा न्याया लौकिकाश्शास्त्रीयाश्च संस्कृतसरस्वतीमध्ये दृश्यन्ते। तत्तन्न्यायस्वरूपाणां विषयाणां च तत्तन्निबन्धेषु कार्त्स्न्याभावात्तदन्वेषयमाणैरप्यनधिगम्यमानैर्मुहुर्मुहुर्दुःखमनुभूयते । अतस्तेषां स्वरूपप्रभृतिप्रदर्शनार्थं निरुक्त्युदाहृतिवाक्योपक्रमप्रभृतिभिश्च एकत्र संग्रहः प्रेक्षावतां मनीषिणामानन्दाय भवेदिति बहुकालतोऽस्मदाशैषाऽस्ति स्म। अथेदानीं मुलताननगरनिवासिसेतुपालोपनामकपण्डितठाकुरदत्तशर्म्माभिधाः—विद्वांसो मध्यमाश्च लौकिकन्यायस्वरूपादिकज्ञानजन्यानन्दमनायासेनाऽनुभवेयुरिति, स्वर्गलोकनिवासिनो निजज्येष्ठात्मजस्य भुवनेशदत्तशर्म्माभिधस्य चिरमिहलोके स्मृतिस्स्यादिति च मनस्याधाय 'भुवनेशलौकिकन्यायसाहस्री'-नामकमिमं ग्रन्थं निर्माय मुद्रयितुं मह्यमर्पितवन्तः। स च मया स्वकीये 'श्रीवेङ्कटेश्वर' मुद्रणालये शोभनाक्षरैस्स्वच्छमसृणपुष्टपत्रेषु सम्मुद्रय प्रकाश्यते। तदेतद्ग्रहणवलोकनादिभिर्मामनुगृह्णन्तु मनीषिण इति भूयः प्रार्थ्यते।

श्रीकृष्णदासात्मज–क्षेमराजः,
'श्रीवेङ्कटेश्वर' स्टीम्–मुद्रणालयाध्यक्षो मुम्बयी–स्थः

॥ श्रीः ॥

# भुवनेशदत्तवृत्तान्तः ।

श्रीमदखिलललामभूरिभरभर्तुर्भारतस्य नानानादनदनदीनदपञ्चकपञ्चाम्बुनामावच्छिन्नजनपदान्तर्गतेऽसह्यश्रीवाच्यभक्तभीभञ्जकभगवदात्तनृसिंहावतारे गाढगुणगणमगुणगणकगायकाद्यग्रगणनीये धर्म्मधैर्य्यधनधान्यधामत्राणीभूते मूलत्राणनामनगरे किलासीच्छास्त्रशासितग्रामादिशोभितज्योतिर्विद्याविवरणवरीयान्विमलवत्सवंशावतंसो विद्याध्ययनाध्यापनधारितधीरध्यवधारितधर्मकृताधर्म्मसमूलविध्वंसो वेदविहितषट्कर्म्मचेक्रियतासादितकीर्त्तिधवलीकृतकाष्ठाभागभ्रामितक्षीरधीविमोहितहंसः सारस्वतसेतुपालोपाह्वकुलकमलदिवाकरः श्रीमद्वाशानन्दाभिधो ब्राह्मणाग्रगण्यः । तस्मात्सद्भावविभवभावितात्मेष्टदेवप्रभावेण षट्शास्त्रनिष्णातो दिवाकरः कोमलकान्तकमलकुलानाम्, निशाकरः सान्त्वसत्स्वभावसौम्यसुसज्जकोराणाम्, आकरोऽग्रेगणितव्यगुणरत्नानाम्, रत्नाकरो विविधपरोलिमधवलधैर्य्यधर्म्मधनानाम्, अन्तर्वाण्यग्रेसरः श्रीमान् ठाकुरदत्ताख्योऽजनि । अनेन भ्राजंभ्राजं काशीन्द्रप्रस्थवृन्दावनेषु विद्यापाठि । अयं निजदेशदशादिषु राराज्यमानराजद्वारेषु सुस्वधर्म्मसंसत्सु सम्मानं लेभे । अनेन विद्याशम्भुना विद्यपर्ष्णं कर्मठेन ब्रह्मसत्रादिकर्मणा देवर्णञ्च निवर्त्याऽवशिष्टतृतीयपितृणमोचनकान्तिकेन हरिवंशश्रवणाद्युपायकदम्ब आरब्धः । अथ भजत्यनेहसि ...स्य श्रीविश्वम्भरदेवदयया चतुस्त्रिंशदुत्तरोनविंशतिशततमे ( १९३४ ) श्रीविक्रमादित्याब्दे कुलभूषणमात्मजं आविरभूत् । यो नाम्ना भुवनेशदत्तो नृपोऽनात्मजत्वान्धकारितोद्वासितानाम्, रत्नं किलासदेसुकपोलान्तकलाधनकुलानां भवति स्म । अयं सितपाक्षिकप्रतिपत्प्रासः क्षपाकर इव पितृवेश्मनि वर्धिष्यमानोऽत्तारापतिरपि चन्द्रोऽल्पीयसि काले सिद्धस्कन्ध

क्षितमचालितेऽध्ययनागारेऽधीत्य परीक्षोत्तीर्णा । एतस्मिन्काले इष्टदेव
स्ववंशावतंसेन श्रीरामनगरवास्तव्येन कन्यादित्सुना सुप्रसिद्धेनैकेन
वाग्दानमकारि । अथ गणितगणकगणगुणिते सुमुहूर्त्ते सुलग्ने पीतरक्त
कवर्णैस्त्रिविधवद्भरिशोभितानूपर्णमाणवकवयस्यमवयोभिर्विविधविप
तान्तर्वाणिभिर्वरानुयायिभिः प्रमोदेनोत्साहेन समारोहेण पञ्चसहस्ररूप्य
येन पितोद्वाहं चकार । तस्य गच्छति समये मातृङ्कभूषणं पितृयशोव
पल्यङ्कशोशुभो नरेन्द्रनामाऽऽत्मजः प्रादुर्बभूव । अयं पितामहप्र
नानाकिलकिलकल्लोलस्वनैर्बालभावसुलभैः क्रीडनैः समतोषयत् ।
गुणलुब्धो भुवनेशोऽपि इन्ट्रेन्साख्यपरीक्षामारब्धवान् । पश्चात्र देवव
रीक्षायामनुत्तीर्णता जाता । तदापि लवपुरे त्रिंशद्रूप्यकमासिकं जग्राह
प्रायो रूप्यकाणि जनकोपचर्यायां प्रेषयांचकार । तत्रत्यनिवासेन हि
भाषायां सुलेखको भूत्वा सत्यश्रीसनातनधर्मलेखानलिखत् । इंग्लिशभ
यामपीदृक्षाँल्लेखाँल्लिलेख, यानवलोक्याऽद्भुततज्ज्ञा अपि विसिष्मियि
ततः कियत्कालोत्तरमनेन पितुः सेवाऽसौलभ्यात्पितुराज्ञावशाच्च तस्मात्
मूलत्राण एव स्थितिरकारि । अयं देशोन्नतिचेकितः श्रीसनातनधर्मोपदे
ज्योतिश्शास्त्रशाश्वतपरिश्रमश्रमितं पितरमवलोक्य तदसाधारणश्रम
चिकीर्षुर्ज्योतिश्शास्त्रमारभ्याल्पीयोभिर्दिवसैरधिगतराद्धान्तोऽपरसिद्धान्ते
चमत्कारिसिद्धान्तसाधितप्रक्रियः ( भूत्वा ) इन्ट्रेन्साख्यपरीक्षायामल्पप
तगीर्वाणगीरपि सरित्सागरादिग्रन्थेषु सुवदावदो बभूव । अनेन सत्यव
प्रियंवदेन सदाचारिणा सत्सङ्गतिपरेणामस्याभोजकेन त्रिकालसन्ध्या
शिवार्चने शिवादिस्तोत्रादिषु च दृढा भक्तिरकारि । स्तोत्रपाठानेहसि घन
म्भीरगर्जनामिव दश दिशो गुञ्जयति स्मेति किमधिकेन । अथवा—नित
धैर्यादिगुणानाम्, दोषोऽधैर्यादिदोषपतङ्गानाम्, प्रेमा प्रियवमाना
चक्षुः पित्रोः, आश्रयो भ्रातुः, चन्द्रश्चकोरवान्धवानाम्, शृङ्गारो योषिता
कमलं दर्शकषट्पदानाम्, सेनापतिर्निर्नीनाम्, नन्दनः कुलस्य, चन्द
सुहृदयानाम्, ईशो भुवनानामासीत् । येनास्यारम्भः कारितः स प्रियदर्श
पुत्रम्नं कर्मशूरं तेन कर्मणा श्रान्तं निरममन्तोऽप्य कृतमनस्का आश्राम

मप्यकृत्वा तस्मै वियुक्तां दर्शयन्, तस्य दशामगणयन, तस्मिन्नद्ध-श्रद्धोऽप्यश्रद्धां प्रकटयन्, किम्भूतः किं कृतवानिति वक्तुं न क्षमा वयम्, येन देशस्य धर्म्मस्य कुलस्य चोन्नतिरासीत्, स कारित, इति लेखितुं लेखनी न क्षमा, करो वेपते, लेखन्यवस्रंसते, गात्राणि शिथिलन्ति, हृदयं ज्वलति, कण्ठः कफेन रुध्यते, अश्रूणि पतन्ति, मनसश्चक्षुषश्चांधकारो दृश्यते, हा! अद्य कः परिचितो गदितुं क्षमः, यद्भूतले नास्ति भुवनेशः, केनाहूतः कुत्र गतः, हा दुर्दैव! कस्मात्पृच्छामः? शतधा भवति हृदयम्, भित्तयोपि रुदन्ति, किं पुनः परिवारः, किं पितरौ, हा हा हा!!! यस्य पितुरमृतफलं नेत्रानन्दो हृदयनन्दनः पुत्रः, यस्य भ्रातुः शासकः रक्षकः अग्रजः, यस्या विंशतिवर्षा-याः सगर्भाया धर्मपत्न्याः प्रियः स्वामी, यस्य 'पितःपितः' चाकथ्यमान-स्य वर्षचतुष्टयस्य पुत्रस्य लालनस्यानवस्तत्रभवान् पिता; गतः, तेषां दशां को गदितुं समर्थः। ईदृशे क्षते जातेऽपि ईदृशे वज्रप्रहारेऽपि दुर्दैवं न विश्रान्तम्। तद्दुर्विपाकि पुनः क्षतेऽङ्गारं लवणधारं वज्रप्रहारं च युगपत्पातयामास, यत् 'पितःपितः' चाकथ्यमानो नरेन्द्रोपि पितुः सन्निधौ शिवलोके गतः! कष्टम्! अवशिष्टाधारोऽपि पितामहस्य मात्रादीनां च विहाय तान्दिवि विलीनः। अकाले षड्विंशतिवर्षायुषि भुवनेशस्वर्गारोहणं, चतुर्वर्षायुषि नरेन्द्रानुगमनं कस्य परिचितस्य सहृदयस्य गुणज्ञस्य शोकाय न भवति। यस्योद्योगेन यस्यार्थमयं ग्रन्थ आरब्धः स भूतले नास्ति किं कुर्मः परिश्रममथ वा सदाशिवलोके तस्यात्मसंतोषार्थमारभामहे। तस्योद्योगसाफल्येच्छया 'भुवनेशन्यायसाहस्री' नाम्ना तस्य स्मरणे प्रकाश्यते ग्रन्थः। अस्यावलोकनजन्यलाभोप्यत्मपरलोकस्थभुवनेशस्य साहाय्यं क्रियादिति विज्ञापयति श्रीमट्ठक्कुरदत्तचरणशरणतासादितयथामत्यक्षरबोधो विद्यया जन्मना च तद्वंश्यस्तेजोभानुस्तशास्त्रीति शम्॥

॥ श्रीः ॥

# अथ भुवनेशलौकिकन्यायसाहस्रीन्यायानुक्रमणिका ।


| ायाङ्काः | पृष्ठाङ्काः | न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|---|---|
| अ. | | ६२१ अतीरमन्ध० | २१९ |
| अकामस्य क्रिया० | १८६ | ६१५ अतिदेश० | २१५ |
| अके चेन्मधु० | ११ | ४८६ अतीतमहिषी | १५७ |
| अकृतव्यूहाः पाणिनीयाः | १९३ | २३१ अत्यन्तवक्रवन्तः | ९४ |
| अक्लृप्ताऽभावकस्य | ३३ | ५०८ अथ सन्निहिता | १८३ |
| अगतिकगति० | २३५ | २९३ अदग्धदहन | ११४ |
| अंगगुणनिषेधे | २९० | ५९१ अशोषतैव | २०७ |
| अंगारन्यायः | २२५ | ५१२ अधिकं तु प्रविष्टे | १८४ |
| अंगुलीदीपिवया | २९३ | ४७ अध्यारोपाऽप० | २५ |
| अंगुल्यग्रे करिणां | २९३ | ७१२ अनन्यलभ्यः श० | २४३ |
| अग्निशिखान्या० | २४१ | ७११ अनन्यलभ्यः | २४२ |
| अग्न्यानयन | ७४ | ७३ अनधीतेमहा० | ३८ |
| अचिन्त्याः खलु ये | २५४ | ६३१ अनवयवेशाखा० | २२० |
| अचलं गुणवृत्तं | ३०२ | ६१२ अनवस्थान्या० | २१३ |
| अचेतनेष्वपि | २८५ | ८६४ अनारभ्या० | २९० |
| अजगरवृत्ति | ३११ | ९६२ अनार्यसंगमा० | ३११ |
| अजहत्स्वार्था वृत्ति | १४८ | ९९७ अनुकरणंहि० | ३१९ |
| अज्ञाकृपाणीय | ३१ | ६४९ अनुक्रमप्यू० | .२२७ |
| अज्ञागलस्तन | २०४ | ८२९ अनुपदिष्टंस० | २८२ |
| अज्झल० | ३०७ | ५५३ अनुवृत्तिन्या० | १९५ |
| अज्ञातपुत्र | ७१ | १९० अन्तरेणापि नि० | ८० |
| अणुरपि विशेषो | १०२ | ६५९ अन्तर्दीपिका० | २२९ |
| अंडकुकुटी० | ८९ | १६६ अन्ते या मतिः | ७१ |
| अतत्त्वर्याकुट्टनी० | ३०९ | २५२ अन्ते रण्डाविवा० | १०३ |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| ६५५ अंधकवर्त्तकीय० | २२८ |
| ४९३ अन्धकूपपतन | १७८ |
| ७६ अन्धगजन्या० | ३९ |
| ७७ अन्धगोलांगू० | ४० |
| ८६ अन्धचटक० | ४३ |
| ३०२ अन्धदर्पण० | ११५ |
| १७९ अन्धपङ्गु० | ७६ |
| २४ अन्धपरम्प० | १८ |
| ३४१ अन्धस्यैवान्ध० | १२२ |
| ९१२ अन्धाऽनन्ध | ३०१ |
| ८८० अन्यगेहस्थि० | २९३ |
| २७० अन्यद्भुक्तम् | १०९ |
| ४२७ अन्यार्थम्प्रकृतम् | १४४ |
| ४८८ अन्याविकन्या० | १७५ |
| ६०५ अन्येनचान्यस्य | २११ |
| ६१० अन्योन्याश्रय० | २१३ |
| ४१९ अन्वयव्यतिरेक | १४१ |
| १३२ अपन्थानन्तु | ५९ |
| ३३२ अपराह्णच्छाया | १२० |
| ४९४ अपवादन्या० | १७८ |
| २८७ अपसारिताग्नि० | ११३ |
| ७०८ अप्राप्तेशास्त्रम् | २४१ |
| ५८६ अबाधेनोपपत्ती | २०६ |
| ६३६ अब्धिफेनादि० | २२२ |
| २०० अभ्रमहन्यायः | ८३ |
| ८२६ अभक्ष्यप्रतिषेधेन | २८१ |
| ८५५ अभाण्डलाभ | २९२ |
| ९६९ अभिभूतिभया० | ३१२ |
| ५० अभिव्यक्तपरायां | ३६ |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| ७३१ अभीप्सीवियो० | २४८ |
| ८३३ अभेदका गुणा | २८२ |
| ८२८ अभ्यन्तराश्च | २८२ |
| ४४५ अभ्यन्तरे हि समु० | १५१ |
| ९१९ अयस्कान्तन्यायः | ३०३ |
| ४६२ अयाचितमण्डनन्या० | १६४ |
| ३०६ अरण्यरोदनन्या० | ११५ |
| ९५९ अरण्यचन्द्रिकान्या० | ३११ |
| ८३७ अर्थवशाद्विभक्ति० | २८४ |
| ५८४ अर्थस्योक्तत्वेन· | २०५ |
| ७१९ अर्थात्समर्थौ | २४४ |
| ७७३ अर्धकुक्कुटीन्या० | २५९ |
| २५५ अर्धजरतीन्या० | १०४ |
| ५५१ अर्धलौकिकन्या० | १९१ |
| २५६ अर्धवैशन्या० | १०४ |
| ८७६ अर्धवैशसन्या० | २९३ |
| ७७६ अलमुन्मत्तवचाधि | २६० |
| १८९ अल्पस्यहेतोर्य० | ८० |
| २३५ अवयवप्रसिद्धेः | ९७ |
| ६२० अवयवार्थवत्त्वा० | २१७ |
| २२१ अवयवा अर्थवन्तो | २१७ |
| ६२२ अवयवे कृतं | २१८ |
| ४४८ अवयवे शास्त्रार्थ० | १५३ |
| ६१ अवश्याऽपेक्षिता | ३३ |
| ३५५ अशक्तास्तत्पदं | १२५ |
| ६५८ अशक्तोऽहं गृहा० | २२९ |
| ७३४ अश्लीलं कस्य | २४८ |
| १९६ अशोकवनिका० | ८१ |
| १११ अश्मलोष्टन्या० | ५० |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| १०५ उष्ट्रगुडन्या० | ४९ |

ऊ.

| | |
|---|---|
| ७६७ ऊर्णनाभिन्या० | २५८ |
| ६३२ ऊर्ध्वं प्राणा ह्यु० | २२१ |
| २९५ ऊषरवृष्टिन्यायः | ११५ |
| ५६३ ऊषरवापितबीज० | १९९ |
| ९२० ऊहाऽपोहन्यायः | ३०२ |

ऋ.

| | |
|---|---|
| २५३ ऋजुमार्गेण सिद्धय० | १०४ |
| ५२७ ऋतुमतीकन्यकान्या० | १८७ |

ए.

| | |
|---|---|
| २५८ एकग्रनिर्णीतः | १०५ |
| ३५० एकदेशविकृतम० | १२४ |
| १३० एकवाक्यत्वापन्ना० | ५९ |
| ८२४ एकवृंतगतफल० | २८१ |
| ८४ एकं सन्धित्सतो० | ४३ |
| ११ एकसंबन्धिज्ञा० | १३ |
| ४२९ एकस्याप्यनेकशा० | १४५ |
| १४८ एकाकिनी प्रतिज्ञा | ६४ |
| ५२९ एका क्रिया द्वयर्थकरी | १८८ |
| ९२ एकामसिद्धिं परि० | ४५ |
| ५७९ एकोपि हन्ति गुण० | २०३ |
| ५८० एको हि दोषो | २०३ |
| ७०५ एरण्डबीजन्या० | २४१ |

ऐ.

| | |
|---|---|
| ९४१ ऐकमत्ये द्वयोरेव० | ३०८ |

ओ.

| | |
|---|---|
| ९१५ ओतप्रोतन्या० | ३०२ |

औ.

| | |
|---|---|
| ४९२ औपाधिकाऽऽकाश० | १७७ |

क.

| | |
|---|---|
| २४८ कः प्राज्ञो वाञ्छति० | १०९ |
| ३१४ कह्लारन्यायः | ११६ |
| २५९ कण्ठकन्या० | १०६ |
| ५ कण्ठचामीकर० | ११ |
| २२९ कदम्बकुसुम० | ९३ |
| ७३८ कदर्याणां करेभ्य० | २४९ |
| ३१८ कदलीफलन्या० | ११७ |
| ४१६ कनककुंडलन्या० | १४० |
| ५३६ कपिञ्जलाधिक० | १९० |
| ४९५ कफोणिगुडन्या० | १७८ |
| २०७ करकंकणन्या० | ८६ |
| २८१ करस्थबिल्व० | ११२ |
| ६५३ करिघटान्या० | २२६ |
| २०६ करिबृंहित० | ८६ |
| ३५६ कर्णकौन्तेय० | १२५ |
| ७३२ कर्तव्यं हि सतां० | २४८ |
| ८०० कर्माणि व्यज्यते | २७१ |
| १७४ कष्टं कर्मेति | ७४ |

का.

| | |
|---|---|
| ५५७ काकिनीन्या० | १९६ |
| ५५ काकतालीयन्या० | ३० |
| १२४ काकदध्युपघा० | ५५ |
| ३०४ काकदन्तप० | ११९ |
| ६५१ काकपिकन्या० | २२७ |
| ४९६ काकमांसं शुनो० | १७८ |
| २४८ काकाक्षिगोलक० | १०१ |

| न्यायाङ्कः | पृष्ठाङ्काः |
|---|---|
| ६५० काचमणिन्यायः | २२७ |
| ८३४ कान्तारन्यायः | २८३ |
| ४७४ कान्तारोत्तरणाय | १७२ |
| ८३६ कामचारकथवति० | २८३ |
| ७१३ कामाकुलकामिनी० | २४३ |
| ४० कारणगुणप्रक्रम० | २२ |
| २७६ कारणनाशे कार्य० | १११ |
| ५४ कारयितुः कर्तृत्व० | ३० |
| ७०१ कार्यकारणभाव० | २३९ |
| २७८ कार्यनाशे कारण० | १११ |
| ६०६ कार्यविपरिणामा० | २११ |
| ५४२ कार्यं सर्वं कारणमात्र० | १९२ |
| ५५८ कार्यात्कारणजन्मेति० | १९७ |
| ३८ कार्येण कारणसम्प्र० | २१ |
| ३३८ कांस्यभोजनन्या० | १२१ |
| कि. | |
| ७७८ किमज्ञानस्य दुष्कर० | २६० |
| की. | |
| ११० कीटभृंगन्या० | ५० |
| ५५० कीटोद्धारन्या० | १९४ |
| ९१० कीलप्रतिकील० | ३०१ |
| कु. | |
| ७३५ कुकर्म सर्वस्य फ० | २४८ |
| ३२३ कुक्कुटध्वनि० | १२० |
| ८९४ कुंजरस्नान० | २९६ |
| ८४३ कुंडशरोपारित० | २८६ |
| ९०५ कुब्जोपि चित्रे | २९९ |
| ८१६ कुमारीकंकणन्या० | २८० |
| ७१७ कुलकन्यायः | २४४ |
| ७०३ कुलालचक्र० | २४० |
| ५९७ कुलालचक्रकीट० | २०९ |
| ४६९ कुशकाशालम्बन | १६७ |
| ९८५ कुसुमस्तवक० | ३१७ |
| ९२२ कुसूलधान्य० | ३०४ |
| कू. | |
| १५० कूपखानक० | ६५ |
| ७४ कूपमण्डूक० | ३८ |
| ६६४ कूपयन्त्रघटिका० | २३० |
| १७७ कूर्माङ्गन्या० | ७५ |
| कृ. | |
| ७०२ कृतप्रणाशाऽकृता | २३९ |
| ५४० कृतात्ययेनुशय | १९१ |
| ३१० कृते कार्ये किं मु० | ११६ |
| ६५ कृत्रिमाकृत्रिमयोः | ३४ |
| २२७ कृदभिहितो भावो | ९३ |
| के | |
| ९१४ केदारिकन्यायः | ३०२ |
| १०८ कैमुतिकन्या० | ४९ |
| को. | |
| ८१४ कोटिशो दृश्यमानो० | २७९ |
| ११५ कोशपानन्या० | ५१ |
| ४१० क्रमविपर्यासन्या० | १३८ |
| ५३९ क्रियाभेदात्फल० | १९१ |
| ९०० क्रियासिद्धिरसत्वे | २९८ |
| ५१ क्रिया हि विकल्प्यते | २८ |
| ९९३ क्षते प्रहारा निप० | ३१८ |

न्यायाङ्काः पृष्ठाङ्काः

च.

७६१ चक्रनाभिन्या० २५६
२७५ चक्रभ्रमण० १११
५५६ चक्रशाकीचक्रवाद० १९६
६११ चक्रकन्या० २१३
४५३ चक्षुर्दीपन्या० १५५
५७६ चण्डालपृथैक० २०२
८७१ चतुर्व्यूहन्या० २९१
७८ चतुर्वेदविन्न्या० ४१
९८९ चन्दनगुण० ३१७
६८९ चन्द्रचन्द्रिका० २३६
२१० चन्द्रज्योत्स्ना० ८७
२८६ चम्पकपटन्या० ११३
८९ चर्मदन्तौ महिषीं ५५

चा.

४२० चातकजीमूत० १४२
१२७ चालनीन्यायः ११९

चि.

२८५ चित्रपटन्या० ११३
२८९ चित्रांगनान्या० ११४
२९१ चित्रानलन्या० ११४
२९० चित्रामृतन्या० ११४
३८८ चिन्तामणि परित्यज्य १३४

चौ.

१२३ चौरापराधान्माण्ड० ५५
८२० चौरापहार्यन्या० २८०
६६२ चौरान्वेषणे चौर एव २३०

न्यायाङ्काः पृष्ठाङ्काः ।

छ.

६७० छत्रिन्यायः २३२
६२३ छन्दोवल्कलयः २१८

छि.

६४७ छिद्रेष्वनर्था बहु० २२६

ज.

६१८ जतुकाष्ठन्या० २१६
५३५ जन्मान्तरसहस्रेषु १९०
२६० जलकतकरेणु० १०६
९२५ जलचन्द्रन्या० ३०५
६३८ जलतरंगन्या० २२३
२९७ जलताडनन्या० ११५
७४३ जलेतरंगबुद्बुद० २५०
८ जलतुम्बिका० १२
८ जलतैल १२
३७१ जलौघन्या० १३०
४३५ जहत्स्वार्थावृत्ति० १४७
४३७ जहदजहल्लक्षणा० १४८

जा.

४२४ जामात्रर्थं प्रस्तुत० १४४

जि.

८४० जित्वरीवद्रुपा० २८५

जी.

९०२ जीवितोऽपि न जीवे० २९९

ज्ञा.

३७८ ज्ञानमज्ञानस्यैव० १३२
७९० ज्ञानार्णवोत्कर्ष० २७२

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| ९६८ तत्रच्छितं हिरण्य० | ३१२ |
| **टि.** | |
| ३९० टिट्टिभन्या० | १३४ |
| **त.** | |
| २२२ तक्रकौण्डिन्य० | ९० |
| ११६ तण्डुलभक्षण० | ५१ |
| ८५३ तत्प्रख्यन्या० | २८८ |
| ४८६ तत्सामीप्यात्ताच्छ० | १७५ |
| ४८७ तत्साहचर्यात्ताच्छ० | १७५ |
| ४१८ तत्स्थानापन्नस्त० | १४१ |
| ७१ तदभिन्नाभिन्नस्य | ३७ |
| ३७९ तदागमे हि दृश्यत | १३२ |
| ३१ तद्वेदोरेव तरस्तु | २२ |
| ६२५ तदेकदेशभूतं | २१८ |
| ६१७ तद्गुणमुपलभ्यत | २१६ |
| ९९४ तन्तुन्यायः | २१८ |
| ११८ तप्तपरशुग्रहण० | ५१ |
| ५९८ तप्तमाषतिलक | २०९ |
| ११८ तप्तपरशुम० | ५१ |
| ५९८ तप्तमाषविद० | २०९ |
| १२० तप्तमाषिकोद्धर० | ५१ |
| ४०१ तमःप्रकाश० | १३७ |
| ६६९ तमोदीपन्या० | २३१ |
| ७८९ तरपुष्पाकिनी | २७२ |
| ३८६ तत्त्वमभावा० | १३३ |
| ५५६ तर्काप्रतिष्ठाना० | २५४ |
| ५८९ तरिमन्विदिते० | २०७ |
| ७२२ तस्करस्य पुर० | २५८ |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| **ता.** | |
| ४८५ ताद्धर्म्यात्ताच्छब्द० | १७२ |
| ४८४ तात्स्थ्यात्ताच्छब्द० | १७२ |
| ३१३ तालसर्पन्या० | ११६ |
| **ति.** | |
| १२६ तिलतण्डुल० | ९७ |
| **तु.** | |
| ६३४ तुलायष्टिन्या० | २२१ |
| २४३ तुलोन्नमनन्या० | १०० |
| ८३५ तुल्यबलप्रेपण० | २८३ |
| ४०९ तुषकंडन० | १३८ |
| १८१ तुष्यतुदुर्जन० | ७८ |
| **तृ.** | |
| १० तृणजलौका० | १३ |
| ४३३ तृणारणिमणि० | १४६ |
| १८८ त्यजेदेकंकुल० | ८० |
| १२२ त्यागशाद्गुलदिनी० | ५५ |
| **द.** | |
| २८४ दग्धपत्र० | ११२ |
| ५९३ दग्धपट० | २०८ |
| ४९७ दग्धबीज० | १७९ |
| २८३ दग्धरसना० | ११२ |
| २६१ दग्धेन्धनवह्नि० | १०७ |
| ४३४ दण्डचक्र० | १४७ |
| २५० दण्डसर्पमारण० | १०३ |
| १७२ दण्डापूपन्या० | ७४ |
| ५६६ दत्तातिलोजाष्टि० | ११९ |
| १९४ दधित्रापुष० | ८१ |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| ६१४ पूर्वाबाधेन | २१५ |
| **पृ.** | |
| ७६८ पृथिव्योपाधि० | २४९ |
| ५८७ पृष्ठाकोटिन्या० | २०६ |
| **प्र.** | |
| ८५६ प्रकरणाद्वाक्यं | २८९ |
| ६० प्रकृतिप्रत्ययार्थ० | ३२ |
| ५९४ प्रकृतिपद्विकृतिः | २०८ |
| ९९६ प्रकृतिवदनुक० | ३१९ |
| ३४२ प्रक्षालनाद्धि | १२२ |
| ९६५ प्रणमन्त्यनपाय० | ३१२ |
| ८६८ प्रतिप्रधानं गुण | २९१ |
| ९४५ प्रतिमावश्च पश्यन्ति | ३०८ |
| १६२ प्रत्यक्षे किमनुमान० | ७० |
| ५९६ प्रत्ययवयच्च | २०९ |
| ९९८ प्रत्यासत्तिन्या० | ३२० |
| ७५२ प्रथमग्रासे मक्षिका० | २५३ |
| १७२ प्रदीपन्यायः | ७४ |
| ६९१ प्रदीपे प्रदीपं | २२७ |
| २४४ प्रधानमल्लनि० | १०० |
| ६७ प्रधानाऽप्रधानयोः | ३५ |
| ५३७ प्रधाने गृहीते | १९१ |
| ८९८ प्रपामेलन्या० | २९८ |
| ९२८ प्रमदान्या० | ३०५ |
| ७३३ प्रभूणां हि विभू० | २४८ |
| ३५९ प्रयोजनमनुद्दिश्य | १२६ |
| ५६४ प्रसक्तानुप्रसक्त० | १९९ |
| ६३९ प्रसिद्धानुवादेन | २२४ |
| **प्रा.** | |
| ७९३ प्राकारस्थं स्वगुणोदयेन | २७४ |
| ९४९ प्रायेण मार्यादीः शील्यं | १०९ |
| ७७२ प्रायेण सामान्यविधौ | २५९ |
| ३६ प्रासादवासि० | २० |
| ५१६ प्लवंगमगति० | १८४ |
| **फ.** | |
| ४७६ फलमुख्यगौरवं | १७१ |
| ४ फलवत्सहकार० | १० |
| **ब.** | |
| ९५७ बकवृत्तिन्या० | ३११ |
| ३०८ बधिरकर्णजप० | ११५ |
| ९९९ बधिरान्मंदकर्णः | ३२० |
| ३६३ बहुच्छिद्रघटप्र० | १२७ |
| ५३१ बहुभ्यः श्रोतव्यः | १८९ |
| १९ बहुराजकपुर० | १६ |
| ४६९ बहुसपत्नीक० | १६९ |
| १८ बहुवृकाकृष्टमृग० | १६ |
| ५६७ बहूनामनुरोधो० | १९९ |
| ३६५ बहूनामनुग्रहो | १२९ |
| ३६६ बहूनामनुसरणं | १२९ |
| **बा.** | |
| १०४ बाणोष्ट्रीन्या० | ४९ |
| ९६४ बालादपि सुभा० | ३११ |
| ५८५ बालिसुग्रीवन्या० | २०५ |
| **बि.** | |
| ४९८ बिलवर्तिगोधा० | १७९ |
| ११३ बिल्वखल्वाट० | ५१ |
| २२५ बिल्वविभजन० | ९२ |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| बी. | |
| २१६ बीजवृक्षन्या० | ८८ |
| २१७ बीजाङ्कुर० | ८८ |
| बु. | |
| ६५१ बुभुक्षितःकिन्न० | २२५ |
| ६५२ बुभुक्षितं न प्रति० | २२५ |
| ६५३ बुभुक्षितः किं न | २२४ |
| ब्रा. | |
| २७ ब्राह्मणग्रामन्या० | १८ |
| २०३ ब्राह्मणपरिव्राज० | ८४ |
| २०४ ब्राह्मणवसिष्ठ० | ८४ |
| १६८ब्राह्मणश्रमण० | ७१ |
| भ. | |
| १६३ भक्षितेऽपि लशुने | ७० |
| ५९५ भक्ष्यनियमेना० | २०९ |
| ७४० भद्रमभद्रं वा | २४९ |
| ३९४ भर्तृन्यायः | १३९ |
| ८८२ भामतीमूलत्व | २९५ |
| भा. | |
| १७५ भामतीन्या० | ७५ |
| ८५१ भावार्थाऽधिकरण० | २८७ |
| भि. | |
| ४३ भिक्षुपादप्रसारण० | २३ |
| ३४७ भिक्षुभियास्थाल्य० | १२२ |
| ९८८ भित्तिचन्द्रन्यायः | ३१७ |
| भी. | |
| ४०६ भीष्मासहट० | १३० |
| ५२४ भुजगा शिरांसे० | १८४ |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| भू. | |
| ८५२ भूतम्भव्यायादि | २८८ |
| ७७७ भूतं भव्याय कल्पते | २६० |
| ७५९ भूयस्त्वात्तद्वाद | २५६ |
| ३४० भूलिङ्गशकुनि | १२२ |
| ३७३ भूशैत्यौष्ण्य० | १३१ |
| भे. | |
| ९०४ भेकोपि पारमसाराय | २९९ |
| ८३१ भेदका गुणा | २८२ |
| ६०८ भेर्यापात | २१२ |
| ३९५ भैरवविप्रन्या० | १३६ |
| भ्र. | |
| ३२३ भ्रमरन्यायः | ११८ |
| ३२४ भ्रमरन्या० | ११८ |
| ३२५ भ्रमरन्या० | ११८ |
| ३५ भ्रष्टावसरन्या० | २० |
| १७८ भ्रात्रादिन्या० | ७५ |
| म. | |
| ३२८ मक्षिकान्या० | ११९ |
| ७५२ मक्षिकास्थाने | २५३ |
| ५ मज्जनोन्मज्जन | १२ |
| ९७८ मधूपाऽऽरु | ३१६ |
| ९० मण्डूकतोलन | ४५ |
| ४२९ मण्डूकप्रतिन्या० | १४८ |
| ४५८ मणिप्रदीपप्रभा | १५७ |
| ४९९ मणिमन्त्रन्या० | १७२ |
| ५०० मतकाशिन्यादृष्टा | १७३ |
| २३९ मत्स्यकण्टकन्या० | ९८ |
| ८७१ मधुकरराजमधु० | २९१ |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| ६९९ मधुररसमाधि० | २३८ |
| ६७३ मध्यदीपक | २३३ |
| २४७ मध्यममणि | १०१ |
| ७२१ मध्यागीनो घटः | २४५ |
| ६९२ मनोराज्यविजृंभण | २३७ |
| ९७१ मन्त्रायन्ते न गन्तु | ३१५ |
| १४२ मल्लोद्धरे स्वामिः | ६३ |
| ९४० मर्कटमदिरापानादि | ३०८ |
| १०० मलिनदर्पणन्या० | ७३ |
| २६ मशकामन्या० | १८ |
| ५६२ महाशोषत्यागोऽल्प० | १९८ |
| ८९७ महामत्स्यधीर० | २९८ |
| ५९४ महाम्भदल्पैव | २५४ |
| ८१ महिषी मसवोन्मुखी | ४२ |
| **मा.** | |
| ९०२ मा जीवन्यः | २९९ |
| ९३० मात्स्यन्यायः | ९४ |
| ४६६ मानाधीनामेयसिद्धिः | १६७ |
| ७८५ मायिका गुणाः | २७२ |
| १४१ मारणाय गृहीतो | ६३ |
| ८३० मार्दवे बहवो दोषाः | २८९ |
| ७३७ मालतीपुष्पमनमना | २४९ |
| ८८१ माल्यं कस्य विचित्र० | २९४ |
| **मु.** | |
| ५७४ मुखमस्तीति वक्तव्यं | २०२ |
| ८२३ मुख्यासम्भवे गौण० | २८० |
| २२ मुञ्जादिषीकोद्ध० | १७ |
| **मू.** | |
| ७४२ मूढे मूढमापन्नेन | २४९ |

न्यायाङ्काः

३०३ मूर्धैर्धेन०
७१४ मूत्रविधान
४५१ मूलाभिव्याघ्र०

**मृ.**

४४२ मृगतृष्णान्या०
३४८ मृगभिया गम्या०
२१४ मृगराजसुतन्या०
३०० मृगास्तेन०
१४४ मेघोदये शाखिमूलं

**य.**

४७१ यः कस्तूरं०
४५ यः कारयति सः
१०७ यः कुरुते न भुंक्ते
७६६ यत्र स्तूयते साद्धि०
९०८ यदर्थं जायते
४९१ यत्कृतकं तदनित्यं
७८४ यत्परः शब्दः
८१२ यत्प्रायः श्रूयते
८१३ यत्प्राये यत्र
७२० यत्राधीनगतित्वेय
१३९ यत्रोभयोः समो दोषः
१४० यत्रोभयोः समो
६५७ यथा नाम तथा गुणः
१९९ यथा संख्य०
८५५ यदन्तरेण यन्न
९३३ यदन्नः पुरुषो लोके
९७४ यद्दृष्टं दृश्यते स्वप्ने
७१६ यद्गृह्ये यदपेक्षं
५५१ यद्यथा वर्तते

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| ६९६ यद्यदा यत्करण० | २३८ |
| ६९७ यद्यदा यन्न करोति | २३८ |
| ४६४ यद्विवाहस्तद्गीत० | १६७ |
| ५०० यद्विशेपयोः कार्य० | १७९ |
| २६२ यन्निवृत्तिर्यद्वस्तु | १०७ |
| ७८३ यथार्थादर्थो न | २७२ |
| ७२३ यश्चोभयोस्समो | २४५ |
| ९०१ यस्य दण्डस्तस्य | २९९ |
| ३८५ यस्याऽज्ञाने भ्रमः | १३३ |
| **या.** | |
| ८६५ यागानां वैक्षस्य | २९० |
| ६६१ यादृशं तादृशमेव | २२० |
| ८१० यादृशी भावना | २७८ |
| १४७ यादृशं मुखं तादृशी | ६४ |
| १४५ यादृशी शीतला | ६४ |
| १४६ यादृशो यक्षस्तादृशो | ६४ |
| ४५४ या प्रीतिरविवेकानां | १५५ |
| २७९ यावच्छिरस्तावदी | १११ |
| ४०७ यावत्तैलं ताव० | १३८ |
| ५४२ यावत्संशयसुपि० | १९२ |
| ४०८ यावत्स्नानं ताव० | १३८ |
| ५७७ यावद्वचनं वाच० | २०२ |
| १८२ युगपदेव विशेष्ये | ७८ |
| ३४९ यूकाभियाः कन्था | १२४ |
| **ये.** | |
| २२३ येन नाप्राप्ते यो | ९० |
| ६०४ येषां पुनरवयवा | २११ |
| ६०३ येषां संघाता | २११ |
| **यो.** | |
| ६५६ योगाद्रूढिर्बलीयसी | २२९ |
| ५२८ योग्यप्रयुक्तं | १८८ |
| २५७ योग्यो योग्येन | १११ |
| ५९० योजनप्रायायां | ३२ |
| ८२५ यो यन्निरूपितः | २८१ |
| ७३६ यो यद्वपाति | २४८ |
| ७१० यो यं प्रति सेव्यः | २४२ |
| ८३३ यो यस्य प्रसंगे | २८३ |
| ९७९ यो वंचितेन दूरस्थः | ३१६ |
| ९८० यो यस्य मित्रं | ३१६ |
| ४३० यो हि भुक्तवन्तं | १४५ |
| **र.** | |
| ५०१ रक्तपटन्या० | २८१ |
| १६४ रज्जुसर्पन्या० | ५० |
| २३६ रथकाराधिकरण० | ९८ |
| ३९३ रथवडवा० | १३५ |
| ५६५ रथ्यादीप० | १९९ |
| ४२० रश्मितृण० | १३७ |
| **रा.** | |
| ३५७ राजपुत्रव्याध० | १२६ |
| १८५ राजपुरप्रवेश० | ७९ |
| १०२ राजसं तामसं | ४८ |
| ३६७ राजानुसृतविवाह० | १२१ |
| ८५८ रात्रिसत्र० | २९० |
| ७९८ रात्रौ दीपशिखा० | २७५ |
| ३३० रासभकरभ० | ३३० |
| ४६० राहोश्शिरः | १५३ |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| रू. | |
| ६०२ रूपसामान्य | २१० |
| २३३ रूदिर्योगमप० | ९६ |
| ४८ रेखागवय | २७ |
| २१५ रोगिन्यायः | ११७ |
| ल. | |
| ७२ लक्षणप्रमाणाभ्यां | ६७ |
| ६८४ लक्षणाश्रया लक्ष्यस्य | २३१ |
| ६८५ लक्ष्याश्रयेण | २३५ |
| ९६७ लघयन्खलु तेजसा | ३१२ |
| १३८ लयोर क्षेप० | ३०७ |
| ला. | |
| ७०० लाक्षारसावसिक्त० | २३९ |
| १९२ लाङ्गलं जीवनम् | ८० |
| ५०२ लूतातन्तु० | १८१ |
| लो. | |
| ५०३ लोहचुम्ब० | १८१ |
| ६७५ लोष्टप्रस्तर० | २३३ |
| ६५४ लोष्टप्राकार० | २३३ |
| व. | |
| ८८३ यक्तिणि पदवो | २९४ |
| ७३५ वज्रलेपन्या० | २६० |
| ७२५ वत्सक्षीर० | २४७ |
| ६९३ वरतो व्यापाद० | २३७ |
| २५ वटे यक्ष० | १८ |
| ३८० वध्यघातक० | १३२ |
| १२३ वध्यतां वध्यतां | ६० |
| ५२१ वनव्याघ्रन्या० | १३५ |

| न्यायाङ्काः | पृष्ठाङ्क. |
|---|---|
| ९७२ वह्निविस्फुलिंग० | ३ |
| १७६ वह्निन्याय० | ७ |
| ३९७ वह्निधूम० | १ |
| ७८७ वराटकान्वेषणे | २ |
| २० वरगोष्ठी. | १ |
| ६७६ वरं सांशयिका० | २ |
| १५३ वरघातय | ६ |
| ६७७ वरमद्य कपोतः | ६ |
| ७८७ वराटकान्वेषणे | २ |
| ३६४ वस्तूनि मानान्य० | १ |
| ५५२ वस्तुशक्ति० | १ |
| वा. | |
| ४२८ वाक्यान्यपि | १ |
| ८६२ वाक्यार्थप्रविप्रति | २ |
| ८६० वाङ्नियम० | २ |
| २१३ वाजिमन्दुरा० | ८८ |
| ३७६ वातप्रदीपन्यायः | १३ |
| ५२५ वायुर्नावमिया० | १८ |
| २०१ वायुभक्षण | ८३ |
| ३५२ वायुशैत्यौष्ण्य० | १३ |
| ३८२ वालाग्रशतमा० | १३ |
| वि. | |
| ७४९ विकीर्विकारिणि | २५ |
| ७८६ विधेयं स्तूपते | २७ |
| ७९२ विनामलयमन्यत्र | २७ |
| १७ विनिगमनाविरह | १६ |
| ६३८ विपुटकदलीफल० | २३ |
| ५९० विपुर्धनमुच्य० | २० |
| ९९३ विवेकभ्रष्टानां | ३१ |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| ९५० विशुद्धसत्त्वा० | ३०९ |
| २६३ विशिष्टधर्मे | १०७ |
| १८४ विशिष्टस्य चै० | ७९ |
| ५७१ विशेषसान्नि० | २०१ |
| ५७० विशेषवाक्याद्० | २०१ |
| ५४६ विशेषाभावे | १९३ |
| ५४७ विशेषणाभावे | १९३ |
| ५०४ विशेष्ये विशेषणं | १८२ |
| ८५७ विश्वजिन्न्यायः | २८९ |
| १०९ विषकीट० | ५० |
| ११७ विषभक्षण० | ५१ |
| १९१ विषं मृत्युरिति | ८० |
| ७३९ विषयाऽऽकृष्यमाणा | २४५ |
| ८३९ विषस्य विषमौषधम् | २८४ |
| १३४ विषवृक्षोऽपि संवर्ध्य. | ६० |
| ५१७ विहङ्गमन्या० | १८५ |
| २२८ वीचितरङ्ग० | ५३ |
| **वृ.** | |
| २५१ वृक्षबन्धन० | १०३ |
| ५९ वृक्षप्रकम्पन० | २९ |
| ९५६ वृक्षवृत्ति० | ३१० |
| ५३ वृक्षमूलनिषि० | २९ |
| २ वृद्धकुमारीवर० | ९ |
| ८६ वृद्धिमिष्टवतो मूलं | ४४ |
| ३ वृद्धब्राह्मणवर० | १० |
| ३१७ वृश्चिकीगर्भ० | ११७ |
| १२७ वेण्याकाश० | [illegible] |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| **वै.** | |
| ७५० वैद्ये मित्रे निरन्तरा० | २५३ |
| ३३९ वैशेष्यात्तु तद्वाद० | १२[illegible] |
| **व्य.** | |
| २६६ व्यक्तिन्यायः | १०८ |
| ३६७ व्यञ्जकव्यंग० | १२५ |
| ७०४ व्यपगतलेपा० | २४० |
| ३२ व्यपदेशि० | १९ |
| ४५७ व्यभिचारिणी. | १५७ |
| **व्या.** | |
| ५८३ व्याख्यानतो विशेष० | २०४ |
| ३२० व्याघ्रीक्षीर० | ११८ |
| ८०९ व्याघ्रचोरधनु० | २७८ |
| २६४ व्यापकव्यावृत्त्या | १०८ |
| **व्री.** | |
| १०१ व्रीहिबीज० | ४८ |
| १०२ व्रीहिबीज० | ४८ |
| **श.** | |
| ८१७ शकुनिसूत्र० | २८० |
| ४१२ शङ्काभिः सर्व० | १३९ |
| २८८ शङ्कुस्खातदंष्ट्रो० | ११३ |
| ५०५ शङ्खवेला० | १८२ |
| ४९० शतपत्रभेद० | १७७ |
| ४८९ शते पञ्चाश० | १७६ |
| ६७९ शरपुरुषीय० | २३४ |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| ३८७ सन्दिग्धे मत्प्रयोजनं | १३४ |
| ५८८ सन्दिग्धेषु वाक्य० | २०६ |
| ४५४ सन्नियोगशिष्टा० | १५१ |
| ५०९ सन्निहिते बुद्धि० | १८३ |
| ४६९ सपत्नीकन्या० | १६५ |
| ५७३ समं स्यादश्रु० | २०३ |
| ८०६ समागमास्ताप० | २७७ |
| ५६९ समीपलक्ष्यशब्द० | २०० |
| ४४० समुदाये वाक्य० | १४९ |
| ५२६ समुद्रमापः प्रवि० | १८७ |
| २९६ समुद्रवृष्टि० | ११५ |
| ५१० समूहालंबन० | १८३ |
| ६०० सम्बन्धिशब्दयो | २१७ |
| ४४९ संभवति सामा० | १२० |
| १२५ सम्भवत्येकवाक्य० | ५८ |
| १८६ सम्भवत्यभिचाराभ्यां | ७९ |
| ३७ सर्वं कार्यं सकारणं | २१ |
| २४१ सर्वनाशे समुत्पन्ने | ९९ |
| ५१९ सर्वं परं हरिपदे | १८९ |
| ९६ सर्वं वाक्यं साव० | ४६ |
| ९६ सर्वं विशेषणं | ४६ |
| ७८८ सर्ववेदान्तप्र० | २७३ |
| १३८ सर्वशाखा प्रत्य० | ६२ |
| ६२७ सर्वः स्वार्थं समीहते | २१९ |
| ६४६ सर्वं स्वस्य चरितं | २२६ |
| ४११ सर्वापेक्षन्या० | १४३ |
| ९२९ सर्वारम्भा हि | ३०५ |
| ६२६ सर्वे इमे स्वभूत्यर्थं | २१५ |
| ९८६ सर्वे गुणाः काञ्चन० | ३१७ |
| ५२४ सर्वे वेदा यत्पद० | १८६ |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| ९०९ सलिलभारहर० | ३०० |
| ९३५ सलिलाद्भिदोत्थितः | ३०७ |
| १५६ सविशेषणे हि | ६८ |
| ६८६ सविशेषणानां वृत्तिर्न | २३६ |
| ९१९ संवादिभ्रमन्या० | ३०४ |
| ६६ सहपरिहासह० | ३५ |
| **सा.** | |
| ४६ साक्षात्प्रवृत्तौ | २४ |
| ४२९ साधनानुष्ठान० | १५५ |
| ६८७ सापेक्षमसमर्थं० | २३६ |
| ४८१ सामर्थ्ययोगः | १७४ |
| २५५ सामान्यवाक्यस्य | १०३ |
| ४३८ सामान्यातिदेशे | १४८ |
| ८३८ सामृतैः पाणिभिः | २८४ |
| ८८ सार्वजनीनस्तुल्या | ४४ |
| ६४ साधकाज्ञानेरव० | ३४ |
| **सि.** | |
| ७५१ सिद्धमदयुत्या | २७३ |
| ४०० सिंहमृग० | १३६ |
| ३५८ सिंहमेषन्या० | १२६ |
| १२ सिंहावलोकन० | १४ |
| ३१९ सिंहाक्षिर० | ११७ |
| **सु.** | |
| ८७ सुतजन्मप्रभृति० | ४४ |
| १३१ सुन्दोपसुन्द० | ५९ |
| ६१३ सुपेटिका | २१४ |
| ३११ सुभाहिम० | ११६ |
| ४७० सुभग्नबुद्ध० | १७० |

| न्यायाङ्काः | पृष्ठाङ्काः |
|---|---|
| २५७ सुभगाभिक्षु० | १०४ |
| ४५९ सुभगावालो० | १५८ |
| ८९२ सुवर्णन्या० | २९६ |
| **सू.** | |
| १९८ सूचीकटाह० | ८२ |
| ८०२ सूचीमुख० | २७६ |
| ८०३ सूचीमुखो० | २७६ |
| १६९ सूत्रशाटक० | ७३ |
| ६९४ सूर्यास्तन्या० | २३७ |
| **सै.** | |
| ७४५ सैन्धवोदक० | २५१ |
| ३१२ सैषा महतो० | ११६ |
| **सो.** | |
| ४४ सोपानारो० | २३ |
| ४५ सोपानावरो० | २४ |
| **स्त.** | |
| ३३६ स्तनन्धय० | १२१ |
| ७३५ स्तुत्यै घले० | २७४ |
| ५१२ स्थविरलगुड० | १८४ |
| १९७ स्थालीपुलाक० | ८२ |
| ५६० स्थूलात्सूक्ष्मं | १९८ |
| २२६ स्थावरजंगम० | ९२ |
| १२ स्थूणानिखनन० | १४ |
| २७७ स्नेहदीपन्या० | ३२ |
| ३५१ स्फटिकलौहित्य० | १२४ |
| २४६ स्वकरकुष० | १२३ |

| न्यायाङ्काः | पृ |
|---|---|
| ९३६ स्वस्थे चित्ते० | |
| ८०८ स्वजातिर्दुराति० | |
| ९७३ स्वत एव सतां | |
| २७२ स्वप्नन्याय० | |
| ९०७ स्वप्ने नृप इति | |
| १५८ स्वप्रकाशाश्र० | |
| ४४१ स्वभावसिद्ध० | |
| २७३ स्वभावो दुरतिक्रमः | |
| ७४१ स्वभावो मूर्ध्नि | |
| ५४४ स्वयं तीर्णः | |
| ३५४ स्वयमशक्तः | |
| ३६० स्वाङ्गं स्वव्यव० | |
| ८० स्वाङ्गुष्ठमपि | |
| २१ स्वामिभृत्यादि० | |
| **हं.** | |
| ७५ हंसयक० | |
| ९३१ हंसकाक० | |
| ४१७ हलान्तं मह्मवर्षसं | |
| २८० हस्तामलक० | |
| **हि.** | |
| ४५५ हिरण्यनिधि० | |
| ९६१ हितं मनोहारि च | |
| **है.** | |
| ७०७ हैरम्य० | |
| **हो.** | |
| ९८८ होतारमपि जुह्वानं | |
| ८०९ होलिकाधिक० | |
| ३९३ ह्रदनक्रन्या० | |


इति भुवनेशलौकिकन्यायसाहस्र्यां न्यायानुक्रमणिका समाप्ता ।

# भुवनेशलौकिकन्यायसाहस्री।

श्रीगणेशाय नमः॥वन्दे श्रीगणनायकाङ्घ्रिकमलं लोके
दा वन्दितं भक्तस्वान्तसरोवरेषु सततं सञ्छममानन्द-
॥ हैमाभूषणकेसरं सुललितं सौन्दर्य्यगन्धान्वितं नित्यं
रपट्पदैश्च कमलं पेपीयमानम्मुहुः ॥ १ ॥ श्रीमद्गुरुं
वरामसुमेशमूर्त्तिं नानादिशागतसुशिष्यसुगीतकी-
॥ वाराणसीवसतिवासितवामदेवं पट्शास्त्रपाठनव-
तदेवदेवम् ॥ २ ॥ भाष्ये फणीन्द्ररचिते विहितश्र-
वंदे विदग्ध्यवरवन्दितपादपद्मम् ॥ विद्योपकारकरणा-
तावतारं ब्रह्मावबोधमुनिवर्य्यमहानुभावम् ॥ ३ ॥
लेशमात्रेण कृतकृत्यो द्विजः सुधीः ॥ कुर्वे ठाकुर-
यः सेतुपालाह्वजातिजः ॥ ४ ॥ स्मृतये भुवनेशस्य
त्रस्य धीमतः ॥ लौकिकन्यायसाहस्रीनाम्ना ग्रन्थं
हम् ॥५॥ ये चात्र लौकिकन्यायाः प्रोक्तास्तेषामुदा-
॥ वेदान्तशास्त्रगा काचित्काचिच्च शब्दशास्त्रगा
काचिन्न्यायानुगा काचिन्मीमांसाशास्त्रगा तथा ॥
लोकोक्तिर्य्यथा तद्वत् प्रायः प्रोक्तापरापि वा ॥ ७ ॥
त्रं क्वचित्तेषामर्थं स्पष्टे स्फुटं स्मृतम् ॥ प्रायः संक्षे-
क्तं विस्तरादपि च क्वचित् ॥ ८ ॥ अथ तावन्मङ्ग-
रिनिर्विघ्नसमाप्त्यर्थं च गणपतिन्याय उदाह्रियते—

आहमजानिगर्ब्भधमात्वमजासि गर्ब्भधम्" ॥ अस्याऽर्थो यथा—वसन्ति सर्व्वभूतानि यत्र,—सर्व्वस्मिन् वसतीति,—सर्व्वत्रोप्यतेऽनेन वा,वस्ते,वस्यते,वा स वसुः। 'वस निवासे' 'वस आच्छादने' वा। "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" इत्युः। तत्सम्बोधने हे वसो परमेश्वर! वामहेममवसो मदीयधन श्रीगणेशदेव गणाना पतिं त्वा त्वां हवामहे, आवाहयामः 'ह्वेञ् आह्वाने, स्पर्द्धाया च" भ्वादिगणीयो धातुः ह्वयतीत्यादिरूपं, दृशेः पश्यादेशवत् ह्वयतेर्हवादेशेन 'हवामहे' इति प्रयोगनिष्पत्तिः॥ गण्यन्ते प्रशस्तत्वेनेति गणाः श्रेष्ठाः "गण सङ्ख्याने" घञ्, अज् वा, अह्लोपस्य स्थानिवत्त्वान्नवृद्धिःतेषां मध्ये ये गणाः प्रशस्ततरास्तेषां पतिमीश्वरमित्यर्थः॥सकलप्रशस्ततरमीश्वरमिति भावः॥ किञ्च—प्रियाणां प्रेष्ठानामिन्द्रादिदेवानां यज्ञाधिपतित्वेन तेषां ये प्रेयांसः कार्त्तिकेयादयस्तारकदिवधजनितसुखहेतुभूतत्वात्तेषां पतिं युद्धारम्भे त्वदाराधनेन विघ्नध्वंसपूर्व्वकविजयप्रदत्वेन पतिं फलप्रदातारमीश्वरं त्वां हवामहे॥ किञ्च-निधीनां निधिपतिं त्वां हवामहे-निधयः "महापद्मश्च पद्मश्च शंखो मकरकच्छपौ॥ मुकुन्दकुन्दनीलाश्च खर्व्वश्च निधयो नव॥" इति महापद्मादयो धनादीनि तेषां मध्ये ये निधयोऽतिशयानन्तसुखभोगप्रवर्तिका योगसिद्धयस्तेषा पतिं दातारं त्वां हवामहे॥ मदीये कार्य्ये जनितजायमानजनिष्यमाणाऽनेकविधप्रत्यूहसन्दोहविध्वंसनपूर्व्वककार्य्यसिद्धि...

क्रियत इति ॥ किञ्च–गणपते अहं त्वया आ अ
उत्पादितः ॥ आङ्पूर्व्वकणिजन्तस्य 'जनी प्रादुभ
इति धातोः कर्म्मणि रूपमाजानीति "व्यवहिताश्च"
४।८२ इति व्यवहिते छान्दसप्रयोगः ॥ कीदृशोऽहं–ग
धं मात्रा गर्भे धीयते यस्स गर्भधं "व्यत्ययो बहुल
३।१।८५ इति सूत्रेण लिङ्गव्यत्ययः छान्दसः, गर्भ
इत्यर्थः ॥ उक्तं च–"सुतिङुपग्रहलिङ्गनराणां कालहल
स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सोपि
सिद्ध्यति बाहुलकेन" इति॥ किञ्च–अजति गच्छति भक्त
दयं,वा–अजति क्षिपति शरानसुरान्प्रति,–'अज गतिक्षे
पणयोः' अच् प्रत्ययः ॥ अथवा–न जायते अजः उक्तं च–'
हि जातो न जायेऽहं न जनिष्ये कदाचन। क्षेत्रज्ञः सर्वभूत
तस्मादहमजः स्मृतः॥" इति ॥ 'जनी प्रादुर्भावे' "अन्येष्
पि–" इति डः–तत्सम्बोधने हे अज जन्मादिविकाररहि
अवयवावयविभागरहित इति यावत्,–त्वं गर्भधं गर्भ
माऽसि न भवसि, एतेन जन्मविकारकथनेन तदुत्तरत्वे
सर्व्वेषां यथाक्रमसम्भवात् । उक्तं हि यास्कर्षिणा–ष
भावविकारा भवन्तीति वार्ष्यायणिः–जायते, अस्ति, वर्द्धते
विपरिणमते, अपक्षीयते, नश्यतीति, षड्भावविकारवा
पराधीनः शरीरवानिति ध्वन्यते, त्वन्तु विकाराऽभाववा
निर्व्विकाररूपेण स्वाधीनः परमेश्वरः "नमस्ते गणपते" इति
... एव सकलं कर्तुमकर्तुमन्यथा कर्तुं समर्थोऽसीति
चेतम् ॥ न चास्य "गणानां त्वा–" इति मन्त्रव्याख्यान

स्योव्वटसायणादिवेदभाष्यकर्त्तृकेभिन्नार्थकत्वेनाऽप्रामाण
स्यादिति वाच्यम् । वेदमन्त्राणां कामधेनुरूपत्वा
एकस्यैव मन्त्रस्याऽऽप्तोक्ताऽनेकधाऽर्थानां शास्त्रेपूप
म्भत्वाच्च । तथा हि—"चत्वारि शृङ्गा त्रयोऽस्यपादा
शीर्षे सप्त हस्तासोऽस्य । त्रिधा बद्धो वृषभो रोरवीति म
देवो मर्त्याँ आविवेश" ॥ इति ॥ अयं मन्त्रः शुक्ल
जुर्वेदवाजसनेयिसंहितायां सप्तदशाध्याये ९१ स
ख्यात्मकः । ऋग्वेदे च तृतीयाऽष्टकीयाऽष्टम
ध्यायदशम १० वर्गे तृतीया ऋक् । अस्य मन्त्रस्याऽर्थस्
सायणोव्वटमहीधरादिकृतभाष्यार्थाद्विलक्षणो महाभाष
कारेण कृतः । निरुक्तादिषु चाऽन्यप्रकारेण यास्काचार्य
दिभिः कृतो दृश्यते । तथाहि महाभाष्ये—चत्वारि शृङ्ग
णि—चत्वारि पदजातानि, नामाख्यातोपसर्गनिपाताश्च
त्रयोऽस्य पादाः—त्रयः कालाः भूतभविष्यद्वर्तमानाः द्वे शी
द्वौ शब्दात्मानौ नित्यः कार्यश्च । सप्तहस्तासोऽस्य—स
विभक्तयः । त्रिधा बद्धः—त्रिषु स्थानेषु बद्ध उरसि कण्ठे
सीति । वृषभो वर्षणात् । रोरवीति—शब्दं करोति । कुत ए
द्—रौतिः शब्दकर्म्मा । महोदेवो मर्त्याँ आविवेश—महान् दे
शब्दो मर्त्या मरणधर्म्माणो मनुष्यास्तानाविवेश । मह
देवेन नः साम्यं यथा स्यादिति शब्दस्य वृषत्वेन निरूप
मितिः॥१॥ किञ्च—यास्काचार्य्यैस्तु—चत्वारि शृङ्गेति वेदा

त्रेधा बद्धः मन्त्रब्राह्मणकल्पैर्वृषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिः-यजुर्भि-सामभिः। यदेनमृग्भिः शंसन्ति,—यजुर्भिर्यजन्ति, सामभिः स्तुवन्ति, महोदेव इत्येष हि महान् देवो यद्यज्ञो मर्त्यां आविवेशेत्येष हि मनुष्यानाविशति यजनाय तस्योत्तरा भूयसे निर्वचनायेत्याह ॥२॥ किञ्च-"अभिधानेऽर्थवादः"१।२।३६ इति पूर्वमीमांसासूत्रविवरणे तु—चत्वारि शृङ्गा इति "चतुर्होत्रामृपेत" इति मन्त्राश्चतुः शृङ्गाणि। त्रीणि सवनानि पादाःदम्पती द्वे शीर्षे।गायत्र्यादिसप्तच्छन्दांसि हस्ताः। त्रिधा बद्धः त्रिभिर्वेदैर्वद्धः। वृषभः कामवर्षी। रोरवीति शब्दैः सामादिभिः साध्यत्वादिति भाव इत्युक्तमिति ॥ ३ ॥ किञ्च—सायणाचार्य्यैः—यद्यपि सूक्तस्याऽग्निसूर्य्यादिपञ्चदेवतात्मकत्वात्पञ्चधाऽयं मन्त्रो व्याख्येयस्तथापि निरुक्ताद्युक्तरीत्या यज्ञात्मकाग्नेः सूर्य्यस्य च प्रकाशकत्त्वेन तत्परतया व्याख्यायते अस्य यज्ञात्मकस्याऽग्नेः चत्वारि शृङ्गः—चत्वारो वेदाः शृङ्गस्थानीयाः। यद्यप्यापस्तम्बेन 'यज्ञं व्याख्यास्यामः स त्रिभिर्वेदैर्विधीयते' इत्युक्तं तथाप्याथर्वणस्येतरानपेक्षयैवकाम्रिसाध्यानां कृत्स्नकर्मणामभिधायकत्वात्तदपेक्षया चत्वारि शृङ्गा इत्युक्तम्। त्रयोऽस्य पादाः-सवनानि त्रीण्यस्य पादाः प्रवृत्तिसाधनत्वात्पादा उच्यन्ते। द्वे शीर्षे—ब्रह्मौदनं प्रवर्ग्यश्च, इष्टिसोमप्राधान्येनेदमुक्तम्। सप्त हस्तासः-सप्तच्छन्दांसि हस्ता मुख्यसाधनं छन्दांस्यपि देवताप्रीणनस्य मुख्य साधनमिति हस्तव्यवहारः। त्रिधा बद्धः—मन्त्रब्राह्मणकल्पै-

त्रिप्रकारं बद्धः, बन्धनमस्य तन्निष्पाद्यत्वात्।वृषभः–फलानां वर्षिता। रोरवीति भृशं–शब्दायते, ऋग्यजुःसामोक्तैः शस्त्रयागस्तुतिरूपैर्होत्राद्युत्पादितैर्ध्वनिभिरसौ रौति। एवं महोदेवः–एष यज्ञात्ममहानुभावो देवः। मर्त्यानाविवेश-मर्त्यैर्यजमानैर्निष्पाद्यत्वात् प्रवेश उपचर्य्यते॥अत्र यास्कः–चत्वारि शृङ्ग इति–'वेदा वा एत उक्ताः'इत्यादिना निरवोचत्तदत्रानुसन्धेयम्॥ अथ सूर्य्यपक्षे व्याख्यायते–अस्यादित्यस्य चत्वारि शृङ्गाणि चतस्रो दिश एताः श्रयणार्हत्वाच्छृङ्गाणीत्युपचर्य्यन्ते। त्रयोऽस्य पादाः–त्रयो वेदाः पादस्थानीयाः भवन्ति गमनसाधनत्वात्। तथा हि–'ऋग्भिः पूर्वाह्णे दिवि देव ईयते', इत्युपक्रम्य 'वेदैरशून्यस्त्रिभिरेति सूर्य्यः' इति हि वेदत्रयेण गणतिराम्नाता। द्वे शीर्षे–अहश्च रात्रिश्चेति द्वे शिरसी। सप्तहस्तासोऽस्य–सप्त रश्मयःषड्विधलक्षणा ऋतवः एकःसाधारण इति सप्तहस्ता भवन्ति। त्रिधा बद्धः–त्रिषु स्थानेषु क्षित्यादिषु अध्यात्माधिदैवतकत्वेन संबद्धः,ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिस्त्रिधा बद्धो वा।वृषभो वर्षिता।रोरवीति शब्दं करोति वृष्ट्यादिद्वारा। स महो महान् देवो मर्त्यानाविवेश तन्नियन्तृतया॥"सूर्य्य आत्मा जगतस्तस्थुषश्च इति हि श्रुतम्"एवमग्न्यादिपक्षेऽपि योज्यम्॥शाब्दिकास्तु शब्दब्रह्मतया व्याचक्षते। अपरे त्वपरतया। तत्सर्वमत्र द्रष्टव्यमित्याह ॥४॥ महीधरादयस्तु–यो वृषभः कामानां वर्षिता रोरवीति 'रु शब्दे' यङ्लुगन्तम्।अत्यर्थं शब्दं करोति सोऽयं महोदेवो महति पूजयति, मह्यते वा जनैरिति महो महान् देवः

ब्रह्मादिस्तम्बपर्य्यन्तानां प्राणिनामुपजीव्यो ज्ञानकर्मसमुच्चयकारिणां विदुषां शरीरभूतो मर्त्यान्मनुष्यानाविवेश आविशति स्म मनुष्यान् व्याप्य तिष्ठति स्म॥ यस्य वृषभस्य यज्ञस्य चत्वारि शृङ्गा—शृङ्गाणि ब्रह्मोद्गातृहोत्रध्वर्य्युलक्षणानि । 'त्रयः पादाः—ऋग्यजुस्सामरूपाः । 'द्वे शीर्षे' शिरसी हविर्द्धानप्रवर्ग्याख्ये "शिर एवाऽस्य हविर्द्धानं ग्रीवा वै यज्ञस्योपसदः । शिरः प्रवर्ग्यः" इतिश्रुतेः अस्य वृषभस्य सप्तहस्तासः—सप्त होतारो हस्ता हस्ता इव व्याप्रियन्ते सप्त छन्दांसि वा हस्ताः । यश्च त्रिधा त्रिप्रकारैर्बद्धः प्रातस्सवनमाध्यंदिनसवनतृतीयसवनैर्बद्ध इति॥ शब्दग्रामो वा व्याख्येयः ॥ चत्वारि शृङ्गाणि—नामाख्यातोपसर्गनिपाताः । त्रयः पादाः—प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाः त्रयः काला वा । द्वे शीर्षे—कार्य्यताव्यंङ्ग्यते। सप्त हस्ताः सप्त विभक्तिरूपाः । त्रिधा बद्धः-एकवचनद्विवचनबहुवचनैर्बद्धः । वृषभ इवाऽयमन्यशास्त्राणि अधः कृत्वा रोरवीति । सोऽयं महान् देवो मर्त्यानाविवेश—आविशति स्म, प्रतिपादयति स्म मनुष्येष्विति मनुष्याधिकारवच्छास्त्रस्येति न्यायादित्येवं यज्ञं शब्दश्च वृषत्वेन प्रतिपादयन्तीति॥किञ्चाऽन्ये शिष्टास्तु—वेदरूपयज्ञपुरुषस्य धर्म्मार्थकाममोक्षरूपाणि चत्वारि शृङ्गाणि, कर्म्मोपासनारूपास्त्रयः पादाः, व्यष्टिसमष्टिरूपे द्वे शीर्षे, सप्त स्वराः- "निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थितास्स्वराः"॥इत्युक्ता अस्य हस्ताः, त्रिधा

द्धः गद्यपद्यगीतिरीतितो बद्धः। यद्वा—ईशात्मप्रतिबिम्ब-
पैर्बद्धः वृषभश्चतुर्वर्गवृष्टिकर्त्ता महान् देवो मनुष्येषु
वात्मरूपेणाऽऽविवेश इति विवर्णयन्तीति॥ एवञ्च न पत-
लिपादा अनाप्ताः, न च यास्कादयो मिथ्यावादिनोऽतो
यते वेदमन्त्राणां प्रकरणवशादासोक्ता नानार्था भवन्ती-
; न त्वाधुनिकपापण्डितजनकृता अर्थाः प्रामाणिका
वन्तीति बोध्यम्। न च श्रीगणपतिपक्षीयो "गणानां त्वा-"
ते मन्त्रार्थः कुत्रचिन्न दृश्यत इति वाच्यम्। मन्त्रप्रदीपिका-
वह्वाप्तग्रन्थेषु तद्दर्शनात्। अथर्वशिरसि वरदपूर्वतापिन्युप-
दि आश्वलायनगृह्यपरिशिष्टादिग्रंथेषु चास्यार्थस्य
मानितत्वाच्च। परम्परातशिष्टव्यवहाराच्चेति दिक्॥१॥

## वृद्धकुमारीवरन्यायः॥ २॥

अयं महाभाष्ये "न मुने"। ८।२।३ इति सूत्रव्याख्या-
सरे व्याख्यातः। तद्यथा—वृद्धकुमारी तपस्विनी इन्द्रेणो
वरं वृणीष्वेति सा वरमवृणीत पुत्रा मे बहुक्षीरघृतमोदनं
पात्र्यां भुञ्जीरन्निति। न च तावदस्याः पतिर्भवति कुतः
कुतो गावः कुतो धान्यं, तत्रानया एकेन वाक्येन पतिः
गावो धान्यमिति सर्वं सङ्गृहीतं भवति। एवमिहापि
द्वत्वप्रतिषेधं ब्रुवता नाभावोपि सङ्गृहीतो भवतीति॥
।—यथाऽनया वृद्धकुमार्या एकेन वाक्येन पतिः पुत्रा
धान्यमिति सर्वं सङ्गृहीतं भवतीति तथा काशीमर-
क्तेरिति श्रुत्या यत्साधनमन्तरेण मुक्त्यनुत्पत्तिस्ता-

हसत्रं सद्गृहीतं भवतीति गुरुमस्य वृद्धकुमारीवरन्यायस्यो-दाहरणमिति वदन्ति । वृद्धकुमारी०, वृद्धकुमारीवाक्य०, वृद्धकुमारीवर० इति पर्याया इति बोध्यम् ॥ २ ॥

## वृद्धब्राह्मणवरन्यायः ॥ ३ ॥

यथा—आसीत्कश्चिज्जन्मान्धोऽत्यन्तदरिद्रोऽजातविवाहो वृद्धो ब्राह्मणः स च नानाविधैर्दुःखैर्व्यकुलत्वपीडितस्तीव्रतपश्चरणेन परमेश्वरमाराधयामास। तस्य तपसा प्रीतः परमेश्वरस्त्वाभीष्टमेकं वरं याचस्वेति तं प्रेरयामास। ततः स ब्राह्मणो यदि चक्षुष्मत्वं याच्यते तर्हि दारिद्र्यपीडा स्यादेव तथा भार्यायां याचितायामपि दारिद्र्यान्धत्वसन्तत्यभावाः पुनर्दुःखं जनयेयुरेवं धने याचितेप्यन्धत्वादीति किं याचनीयमिति चिन्तासमाकुलो भूयो विचार्येदं प्रार्थयत्—स्वपौत्रं राजसिंहासनस्थितमीक्षितुमिच्छामीति। अथ च तस्य बुद्धिकौशलतः परमप्रीतेन परमेश्वरेण वरप्रदानेनानुगृहीतो धनं चक्षुषी मनोज्ञां भार्यां सन्ततिं च प्राप्यात्यन्तमाननन्देति । तथा प्रकृतेपीति ॥ ३ ॥

## फलवत्सहकारन्यायः ॥ ४ ॥

यथा—आपस्तम्बसूत्रम्, तद्यथा—आम्रे फलार्थे निर्मिते छायागन्धे अनूत्पद्येते । एवं धर्म्मे चर्यमाणे अर्थादयोऽनूत्पद्यन्ते ॥ यथा "आम्रश्चूतो रसालोसौ सहकारोतिसौरभः" इत्यभिधानादतिसौरभ आम्रवृक्षोऽतिमधुरपक्वफलनमितशाखस्समुपसन्नाय छायार्थिने जनाय फलं परमलभ्याप्रा-

र्थितमपि ददाति,तथैकफलाकांक्षया स्वेष्टदेवताराधनमन्यदपि फलं प्रयच्छतीति ह्येतत्समानविषयकलौकिकव्यवहारान्तरेष्वपि बोध्यम् ॥ ४ ॥

## कण्ठचामीकरन्यायः ॥ ५ ॥

कृतस्वराख्याऽऽकरविशेषचामीकरपदवाच्यस्तत्र भवं चामीकरम्।यद्वा–चमनं चामिः 'इणजादिभ्यः' इतीण्, 'अनाचमेः' इति आङोऽविवक्षितत्वाद्वृद्धिः "कृदि०" ङीप्। चामीं करोति चामीकरं "चामीकरं जातरूपं महारजतकाञ्चने",

भिधानात् चामीकरं सुवर्णं, तेन निर्मितं भूषणमपि चामीकरं,यथा–कण्ठगतं हेमभूषणमज्ञानादप्राप्तमिव कण्ठे तत्पश्येत्युपदेशाज् ज्ञातं प्राप्तमित्युपचर्यते, तथा प्रत्यगात्मतया ब्रह्मणः प्राप्तत्वेपि मायोपहितत्वादप्राप्तमिव स्वहृदि तत्पश्येति गुरूपदेशाज् ज्ञातं प्राप्तमिति निश्चीयते ॥ उक्तञ्च–"प्रत्यगात्मया तस्य प्राप्तत्वेपि च सर्वदा ॥ कण्ठचामीकरन्यायात्तत्प्राप्तिरुपचर्यते ॥" इति ॥ ५ ॥

## अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् । इष्टार्थस्य च संसिद्धौ को विद्वान् यत्नमाचरेत्६॥

अर्के गृहकोणे स्पष्टमन्यत् । तथा यदि निजगृहकोणे माक्षिकं विन्देत तर्हि तल्लाभाय पर्वतं प्रति गमनं व्यर्थम्, तथा स्वात्मनि ब्रह्म विज्ञाय ब्रह्मवेत्ता तदन्वेषणाय तीर्थादिषु न प्रयतत इति भावः । एवमन्यत्रापि यत्राल्पायासेनाभी-

१ कृतस्वर इति नाम्ना प्रसिद्ध आकरः खनिविशेष इत्यर्थः ।

ष्टसिद्धिर्जायते तत्र बह्वायाससाध्ये प्रेक्षावतां न प्रवृत्तिरिति प्रदर्शनायाऽस्य न्यायस्य प्रवृत्तिरिति ॥ ६ ॥

## मज्जनोन्मज्जनन्यायः ॥ ७ ॥

यथा नद्यादौ पतितस्तरणानभिज्ञः कदाचिन्मज्जति कदाचिदुन्मज्जति, तथा-संसारसमुद्रे पतितो ब्रह्मतत्त्वानभिज्ञो जीवः कदाचिन्मज्जति कदाचिदुन्मज्जति शान्तिसुखं न प्राप्नोति यावद्भगवच्चरणारविन्दाश्रयो न भवेत् उक्तं हि-"अपारसंसारसमुद्रमध्ये निमज्जतो मे शरणं किमस्ति। गुरो कृपालो कृपया वदैतद्विश्वेशपादाम्बुजदीर्घनौका ॥ १ ॥" गर्भस्तुतौ-"त्वय्यम्बुजाक्षामलसत्त्वधाम्नि समाधिनावेशितचेतसैके । त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम् ॥ स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीममदभ्रसौहृदाः । भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥" इति ॥ ७ ॥

## जलतुम्बिकान्यायः ॥ ८ ॥

यथा पङ्कलिप्ता तुम्बिका नदीसमुद्रादौ मज्जन्ती पङ्कक्षयेऽवकाशे आगत्य तिष्ठति, तथा जीवो देहक्षये लोकाकाशे गत्वा तिष्ठति। अयमेव तस्य मोक्ष इति दिगम्बरजैना मन्यन्ते ॥ अनेनैव न्यायेन रेफस्योर्ध्वगमनमिति वैयाकरणाः ॥ एवम्-

## जलतैलन्यायोऽपि

व्याख्यात इति बोध्यम् ॥ ८ ॥

## पञ्जरमुक्तपक्षिचालनन्यायः ॥ ९ ॥

यथा पञ्जरान्मुक्ताः पक्षिणः सदोर्ध्वमेव चलन्ति एवमेव जीवो देहान्मुक्तस्सदोर्ध्वमेव गच्छति इति स एव तस्य मोक्ष इति दिगम्बरैकदेशिनो मन्यन्ते । ते च प्रष्टव्याः-पञ्जरान्मुक्तस्य शुकादेः पक्षिण इवात्मनस्सततोर्ध्वगमनं मुक्तिरिति चेत्तदा वक्तव्यं किमयमात्मा मूर्तोऽमूर्तो वा । प्रथमे निरवयवः सावयवो वा।निरवयवत्वे निरवयवो मूर्तः परमाणुरिति परमाणुलक्षणापत्त्या परमाणुधर्म्मवदात्मधर्माणामतीन्द्रियत्वं प्रसज्जेत ॥ सावयवत्वे यत्सावयवं तदनित्यमिति प्रतिबन्धबलेनानित्यत्वापत्तौ कृतप्रणाशाकृताभ्यागमौ निष्प्रतिबन्धौ प्रसरेताम् ॥ अमूर्तत्वे गमनमनुपपन्नमेव चलनात्मिकायाः क्रियाया मूर्तप्रतिबन्धादिति ॥ ९ ॥

## तृणजलौकान्यायः ॥ १० ॥

यथा तृणजलौका तृणान्तरमाश्रित्य पूर्वं तृणं त्यजति तथा जीवस्त्वविद्यादिभिर्देहान्तरं निष्पाद्यैव पूर्वं देहं त्यजतीति भावः ॥ १० ॥

## एकसम्बन्धिदर्शनमपरसम्बन्धिस्मारकमिति न्यायः ॥ ११ ॥

यथा हस्तिपकदर्शनं हस्तिनः स्मारकं भवति तथा–हस्तिपकदर्शनस्य हस्तिस्मारकत्ववन्नद्यादिज्ञानस्य तत्सम्बन्धिकुशादिकस्मारकत्वम्भवतीति भावः ॥ ११ ॥

## स्थूणानिखननन्यायः ॥ १२ ॥

"स्थूणा स्तम्भेपि वेश्मनः" इत्यमरः। अपिशब्द
त्प्रतिमायामपि। स्थूणा यथाऽसकृत्तस्याल्य निख
क्रियमाणे दृढा भवति तथोत्तरग्रन्थेन प्रागुपपादितार्थ
भवतीत्यर्थः ॥ १२ ॥

## सिंहावलोकनन्यायः ॥ १३ ॥

यथा सिंहः कश्चिन्मृगं हत्वाऽग्रे गच्छन्नन्योपि चेत्
त्तमपि हन्यामिति धिया पश्चात्पश्यति हन्ति च दृष्टिप
मागतम्, तथाबुद्धिपथागतस्वपक्षेपरिपन्थिपरिकल्पित
न्यायाभासान्तरनिरासायाप्युत्तरग्रन्थप्रवृत्तिरित्यर्थः ॥ १३

## अस्थूलारुन्धतीन्यायः ॥ १४ ॥

यत्रातिसूक्ष्मार्थज्ञापनाय तत्क्रमेण तत्समीपः समी
तरः समीपतमश्चार्थस्तत्तयोच्यते तत्रायं न्यायोऽवतरति
यथाऽस्तमिते ध्रुवमरुन्धतीञ्च दर्शयतीति विधिद्वारा व
स्तद्दर्शने प्राप्तेऽतिसूक्ष्माया अरुन्धत्या झटिति प्रदर्शयि
मशक्यतया तावच्चन्द्रं तत्त्वेन वदति, ततश्चन्द्रेतरांस्तत
मीपस्थास्तारिकास्ततस्तत्समीपस्थाः सप्तर्षिसञ्ज्ञित
समीपतरास्तत्समीपतमं वसिष्ठं तत्त्वेनोपदिश्य तामेव तत
या बोधयन्तीति तथा गृहादीनामात्मानमिव मन्यमान
प्राकृता गृहे नष्टे नष्टा वयमिति क्रोशन्तो दृश्यन्ते,तान्वा
यन्ती "आत्मा वै जायते पुत्रः" ॥१॥ "स एष पुरुषोऽन्नरस
मयः" ॥ २ ॥ "अन्योऽन्तरात्मा प्राणमयः" ॥ ३ ॥ अन्यो

न्तरात्मा मनोमयः" ॥ ४ ॥ "अन्योन्तरात्मा विज्ञानमयः" ॥ ५ ॥ "अन्योन्तरात्माऽऽनन्दमयः" ॥६॥ इत्यादिका श्रुतिः पुत्रयाऽऽनन्दमयान्तानामनात्मत्वं दर्शयन्ती निर्विशेषात्मतत्त्वमेवात्मत्वेन दर्शयतीति भावः ॥ क्वचिच्च स्थूलाऽरुन्धतीति विनाऽऽकारं न्यायस्वरूपमुक्तम् ॥ केनाचित्–अरुन्धतीप्रदर्शनन्यायत्वेनोदाह्रियतेऽयमिति ॥ १४ ॥

## पारिषदन्यायः ॥ १५ ॥

'समज्या परिषद् गोष्ठी सभा' इत्यभिधानात् परिषदि सभायां साधुः "पारिषदो ण्यः" ४।४।१० इत्यत्र 'परिषदः' इति योगविभागाण्णोऽपि, पारिषदः सभ्यः। तेषामेकस्मिन्न कृतेऽप्यवशिष्टैस्तत्कार्यनिर्वाहो यथा भवति तथा प्रकृतेऽपीत्यर्थः ॥ १५ ॥

## नाऽन्यदृष्टं स्मरत्यन्य इति न्यायः ॥ १६ ॥

यथा कस्यचिदुत्तरवृन्दस्य पूर्वस्माद्भिन्नतया पूर्वेणानुभूतस्योत्तरेणाऽस्मरणापत्तिस्तथा प्रकृतेऽयं न्यायः।"शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः । तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ इति कारिकाव्याख्यानावसरे भाषापरिच्छेदकृता ध्वनितः। तथाहि–ननु चक्षुरादीनामेव ज्ञानादिकं प्रति करणत्वं कर्तृत्वञ्चास्तु विरोधे साधकाभावादत आह–तथात्वमिति, चैतन्यमित्यर्थः । उपघाते नाशे सति अर्थाच्चक्षुरादीनामेव कथं स्मृतिः। पूर्वं चक्षुषा साक्षात्कृतानां चक्षुषोऽभावे स्मरणं न स्यादनुभवितुरभावादन्यदृष्टस्याऽन्येन स्मरणासम्भवादिति "नान्यदृष्टस्ये-

तरेण प्रत्यभिज्ञानात्" ३ । १ । ७। इति गौतमसूत्र भाष्येपि तमेवैतर्हि पश्यामि यमज्ञासिषं सव्येन चक्षुषा दृष्टमेथतरेणापि चक्षुषा प्रत्यभिज्ञानाद्यमद्राक्षं तमेवैतर्हि पश्यामीति ॥ इन्द्रियचैतन्ये तु–नान्यदृष्टमन्यः प्रत्यभिजानातीति प्रत्यभिज्ञानुपपत्तिः। अस्तिचेदं प्रत्यभिज्ञानं तस्मादिन्द्रियव्यतिरिक्तश्चेतन इति ध्वनितश्चेति ॥ १६ ॥

## विनिगमनाविरहन्यायः ॥ १७ ॥

एकतरपक्षपातिनी युक्तिर्विनिगमना, वैकल्पिके वस्तुन्येकस्मिन्नवधारणा शक्तिरिति यावत्, तस्या विरहो वियोग इत्यर्थः ॥ यथा–केचित्सूर्यसिद्धान्तानुयायिगणितस्य सम्यक्त्वादतिसूक्ष्मत्वम् । अपरे वहवस्तु दृग्गणितैक्यापन्नत्वस्यैवाऽतिसूक्ष्मत्वमतो बहुसम्मतत्वाद्विनिगमनाविरहेण वैपरीत्यापत्तौ दृग्गणितस्यैव विनिगमकस्यैतैरपि वक्तव्यत्वेन सौरा एवाऽतिसूक्ष्मा इति रिक्तं वच इति भावः ॥ १७ ॥

## बहुवृकाकृष्टमृगन्यायः ॥ १८ ॥

यथा बहूनां वृकाणां प्रत्येकं भोक्तृत्वे बहूनामेकमत्यासम्भवेन विरुद्धादिक्रियया मृगदेहस्योन्मथनप्रसङ्गस्तथा प्रकृतेपि ॥ १८ ॥

## बहुराजकपुरन्यायः ॥ १९ ॥

यथा एकस्मिन्पुरे यदा बहवो राजानस्तदा तेषामेकमत्याभावेन प्रजानां क्लेशस्तथा एकस्मिन्देहे नाने-

न्द्रियाणां कर्तृत्वे स्वीकृते मिथो विरोधान्नैकमपि सिध्येत् तथाहि-यदा चक्षुर्दर्शनाय प्रवर्तमानं भवति तदाऽन्यानि न्द्रियाणि स्वस्वक्रियया निर्वाहोद्यतानि भवन्ति चेत्तदा द नादि नैकमपि जायते, एवं विवक्षायामस्य प्रवृत्तिरिति॥१

## वरगोष्ठीन्यायः ॥ २० ॥

गोष्ठी—गावोऽनेका वाचस्तिष्ठन्त्यत्र ' गोष्ठी सभा ' इ मरः। अन्योन्यवार्तालापस्थानविशेष इति। वरलाभाय गो वरगोष्ठी। तया यथा वरवधूबन्धूनामैकमत्ये सति विवाह रूपमेकं कार्यं निष्पाद्यते तथा प्रकृतेपि ॥ २० ॥

## स्वामिभृत्यादिन्यायः ॥ २१ ॥

यथा भृत्यादिः सर्वो जनः स्वाम्यादिकं सर्वं स्वप्रयो नाय वाञ्छत्येवं स्वाम्यादिरपीति भावः ॥ २१ ॥

## मुञ्जादिषीकोद्धरणन्यायः ॥ २२ ॥

यथा मुञ्जाख्यतृणादिषीकाख्यं गर्भस्थं मृदु तृणं च रावरणकतया स्थितानां मुञ्जाख्यतृणानां विभजनेन समु यते तथाऽऽत्मापि युक्तयान्वयव्यतिरेकलक्षणोपायेन श त्रितयाद् ब्रह्मचर्यादिसाधनसम्पन्नैः पृथक् कृतश्चेत्स ब्रह्मैव जायते, चिदानन्दरूपत्वस्य लक्षणस्योभयोरवि ष्टत्वात्। उक्तञ्च पञ्चदश्याम्—"यथा मुञ्जादिषीकैवमा युक्तया समुद्धृतः। शरीरत्रितयाद्धीरैः परब्रह्मैव जायते इति ॥ २२ ॥

## गड्डुलिकाप्रवाहन्यायः ॥ २३ ॥

यथा गड्डुलिकानामवीना गणादेका चेत्कूपे पतिता तदा वार्यमाणा अपि सर्वास्तत्र पतन्तीति तथा प्रकृतेऽपि ॥ २३ ॥

## अन्धपरम्परान्यायः ॥ २४ ॥

यथा अन्धेन नीयमाना अन्धाः पतन्ति तथा प्रकृतेपि। अयं प्राक्तनन्यायसदृशोप्यूर्ध्वमुख्येऽनवस्थास्थले एवोदाह्रियते ॥ २४ ॥

## वटे यक्षन्यायः ॥ २५ ॥

यदि वक्तृपरम्परोपदेशस्य मूलभूतोऽनुभवो नास्ति तदा सोप्येतादृशः, सत्त्वे तु विलक्षण इति बोध्यम्। इममेवैतिह्यप्रमाणविशेषतया वदन्तीति केचित् ॥ २५ ॥

## मल्लग्रामन्यायः ॥ २६ ॥

यथान्येष्वपि जनेषु सत्सु मल्लानां बहुत्वान्मल्लग्राम इत्युच्यते तथा प्रकृतेपि ॥ २६ ॥

## ब्राह्मणग्रामन्यायः ॥ २७ ॥

अयं पूर्वसदृशः स्फुटः ॥ २७ ॥

## अम्रवणन्यायः ॥ २८ ॥

अयं पूर्वसदृशः स्फुटः। एतादृशा अन्येपि विवृता ज्ञेयाः " प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि"८।४।५। इति सूत्रेण वननकारस्य णत्वम् ॥ २८ ॥

## नहि त्रिपुत्रो द्विपुत्र इति न्यायः ॥ २९ ॥

त्रित्वस्य द्वित्वव्यापकत्वेपि वाक्यस्य सावधारणत्वात् पुत्रत्रयवतः पुत्रद्वयवत्त्वेपि न तस्य द्विपुत्रशब्दवाच्यता । न्यूनसंख्याव्यवच्छेदकत्वेन त्रिशब्दस्य न यथा द्विपुत्रवाचकतेत्येवं यत्र विवक्षा तत्रास्य प्रवृत्तिरिति ॥ २९ ॥

## देवदत्तापुत्रन्यायः ॥ ३० ॥

यथा नहि देवदत्ताया एव पुत्रः किन्तु देवदत्तस्यापि,मातुः प्राधान्यविवक्षायां देवदत्तापुत्र इत्युच्यते । यथा च दाक्षीपुत्रः पाणिनिः । अत एव यजुर्वेदे वंशकीर्तने स्त्रीप्राधान्येनैव निर्देशः। यथा—"अथ व९ँ शस्तदिदं वयं भारद्वाजीपुत्रोद्भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्रः"इत्यादि श० ब्रा० १४।९।४ ॥ ३० ॥

## देवदत्तपुत्रन्यायः ॥ ३१ ॥

अयं पितुः प्राधान्यविवक्षायां ज्ञेयः ॥ ३१ ॥

## व्यपदेशिन्यायः ॥ ३२ ॥

एकस्मिन्नुभयारोपो व्यपदेशः । यथा—देवदत्तस्यैक एव पुत्रः स एव ज्येष्ठस्स एव कनिष्ठः । किञ्च—निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारो व्यपदेशः,सोऽस्यास्ति तेन तुल्यमित्यर्थः । व्यपदेशिवद्भावेन धात्ववयवत्वाद्रूपभावः, जग्ध्वचदत्र धुक् ॥ ३२ ॥

